श्रीः ।

# वेदान्तसंज्ञाप्रकरणम्

प० परमहंसपरिव्राजकस्वामिश्रीआदित्यपुरी-
निर्मितप्रदीपिकाव्याख्यासहितम्

तच्च

श्रोत्रियब्रह्मनिष्ठस्वामिश्रीधनराजगिरि-
सम्मत्या.

सरणपुर निवासि श्रेष्ठ श्री माणकचंद पौत्र
जगन्नाथ जयनारायण फकीरचन्द खेमका
इत्यनेन.

मुकुन्दात्मज ज्येष्ठाराम शर्मणः
पुस्तकालय द्वारा
मोहमय्यां
गुजराती यंत्रालये मुद्रापितम्

शकाब्दाः १८२३ विक्रमाब्दाः १९५८

मूल्यं आणकचतुष्टयम्

ॐ

# वेदान्तसंज्ञाप्रकरणम् ।

श्रीगणेशाय नमः ॥ नत्वा श्रीकृष्णाह्वानाख्यरेवातीर्थमुनीश्वरौ ॥ संज्ञाग्रन्थस्य चास्यैव क्रियते पददीपिका ॥ १ ॥
मङ्गलं दिशतु मे विनायको मङ्गलं दिशतु मे सरस्वती ॥
मङ्गलं दिशतु मे महेश्वरो मङ्गलं दिशतु मे महेश्वरी ॥ २ ॥

श्रीः ॥ गणेशं गाङ्गेयं गिरमथ गुरुं बोधजनकं
गिरीशं गोविन्दं प्रणतजनतापोपशमकम् ॥
रमां गौरीं गङ्गां सपदि हृदि नत्वा स्वमतये
श्रुतिप्रोक्ताः संज्ञाः परममतिदाश्चोपकलये ॥ १ ॥

चिकीर्षितग्रन्थपरिसमाप्त्यर्थमिष्टदेवतानमस्कारलक्षणं मङ्गलं निबध्नंश्चिकीर्षितं प्रतिजानीते ॥ गणेशमिति ॥ गणेशादीन् हृदि नत्वा स्वमतये स्वरूप-

ज्ञानाय संज्ञा उपकलय इत्यन्वयः ॥ परममतिदाः मोक्षसाधनमतिदा इत्यर्थः ॥ बहुदेवनमस्कारकरणं बहुविघ्नशङ्कयेति भावः ॥ १ ॥

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥
इति वृद्धवचो मत्वा संज्ञाग्रन्थः प्रवर्त्तितः ॥ २ ॥

नन्वद्वैतवादे संज्ञोपकलनं न संभवति ॥ संज्ञा संज्ञीति व्यवहारस्य भेदगर्भितत्वादित्यत आह ॥अध्यारोपेति॥ संज्ञाग्रन्थः वेदान्तसंज्ञाग्रन्थः प्रवर्त्तितः प्रवृत्तिविषयी कृतः भवतीति शेषः ॥ २ ॥

अवस्तुविषया बुद्धिरध्यारोपणमुच्यते ॥
यथार्थविषया बुद्धिरपवादोऽभिधीयते ॥ ३ ॥

ननु कौ तावध्यारोपापवादावित्याकाङ्क्षाया-माह॥अवस्तुविषयेति॥ नन्वध्यारोपणस्य भ्रमरूपतया संस्कारजन्यत्वात्संस्कारस्य चानादित्वात्तद्विषयः संसारः सत्यः स्यादित्यत आह ॥ यथार्थेति ॥ अवस्तुविषयकज्ञानस्यापि संस्कारजनकत्वान्न संस्कारविषयः सत्यः ॥ अन्धेनैव नीयमाना यथान्धा इति श्रुतेरिति भावः ॥ ३ ॥

20-4

प्रपञ्चो द्विविधः प्रोक्तो ह्यज्ञानं द्विविधं स्मृतम्।
शरीरं द्विविधं सूक्ष्मं स्थूलं प्रोक्तं द्विधैव हि ॥४॥

अथ षट्त्रिंशच्छ्लोकैः संज्ञाः दर्शयति ॥ प्रपञ्चो द्विविध इत्यादिना--तदाद्यास्त्रय एव हीत्यन्तेन ॥ स्थूलसूक्ष्मकारणप्रपञ्चानां समष्टिर्महाप्रपञ्चो बाह्यप्रपञ्च आन्तरप्रपञ्च इति प्रपञ्चो द्विविधः ॥ देहाद्बहिर्वर्त्तमानो बाह्यप्रपञ्चः—देहान्तर्वर्त्तमान आन्तरप्रपञ्च इत्यर्थः ॥ समष्ट्यज्ञानं व्यष्ट्यज्ञानमित्यज्ञानं—द्विविधम् ॥ अज्ञानस्य समष्ट्यभिप्रायेणैकत्वव्यपदेशः।व्यष्ट्यभिप्रायेण नानात्वव्यपदेशः।समष्ट्यज्ञानमीश्वरोपाधिः व्यष्ट्यज्ञानं जीवोपाधिरिति विवेकः॥समष्टिसूक्ष्मशरीरं व्यष्टिसूक्ष्मशरीरमितिसूक्ष्मशरीरं द्विविधम् ॥ समष्टिस्थूलशरीरं व्यष्टिस्थूलशरीरमिति स्थूलशरीरं च । द्विधे त्यर्थः ॥ ४ ॥

शक्तिद्वयं च विख्यातं तथा निःश्रेयसद्वयम् ॥
संशयश्च द्विधा प्रोक्तो द्विधाऽसंभावना तथा॥५॥

आवरणशक्तिर्विक्षेपशक्तिरिति शक्तिद्वयम् ॥ अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोर्भेदं वा स्वात्मविलोकयितृबुद्धिमखण्डसच्चिदानन्दस्वरूपं चावृणोतीति–आवरणशक्तिः–विविधस्वरूपेण भवनं विक्षेपशक्तिः–रित्यवं शक्तिः–द्विधेत्यर्थः ॥ अनर्थनिवृत्तिरानन्दावाप्तिश्चेति निःश्रेयसद्वयम् ॥ प्रमाणगतसंशयः प्रमेयगतसंशयश्चेति संशयो द्विधा ॥ श्रुतिभिः कर्म बोध्यते उत शुद्धं ब्रह्म प्रतिपाद्यते इत्येवंरूपा चित्तवृत्तिः–प्रमाणगतसंशयः ॥ ब्रह्म जगत्कारणमुत प्रधानादिकमित्येवंरूपा चित्तवृत्तिः–प्रमेयगतसंशयः ॥ प्रमाणगताऽसंभावना प्रमेयगतासंभावनेत्यसंभावना द्विधा ॥ ब्रह्मणः । सिद्धत्वात्पृथिव्यादिवत्प्रमाणान्तरगम्यत्वेन श्रुतिः सिद्धब्रह्मप्रतिपादिका कथं भवेत्फलाभावान्न भवत्येवेति निश्चयात्मिका चित्तवृत्तिः– प्रमाणगतासंभावना ॥ ब्रह्मणो जगद्विलक्षणत्वेन स्थितत्वाज्जगत्कारणत्वं कथं संभवति न संभवत्येवेति निश्चयात्मिका चित्तवृत्तिः–प्रमेयगतासंभावनेत्यर्थः ॥ ५ ॥

अन्यथाभावना प्रोक्ता द्विधा वेदान्तदर्शिभिः॥
प्रज्ञाद्वयं समाख्यातं समाधिद्वयमेव हि ॥ ६ ॥

अन्यथाभावना विपरीतभावना ॥ प्रमाणगतविपरीतभावना प्रमेयगतविपरीतभावनेति विपरीतभावना द्विधा ॥ ब्रह्मणः सिद्धत्वेन श्रुतीनां तत्प्रतिपादकत्वे निष्फलत्वप्रसङ्गाच्छ्रुतयः कर्मपरा एवेति निश्चयः प्रमेयगतविपरीतभावना॥ तन्तुपटयोः कार्यकारणयोः सारूप्यं दृश्यते॥ अतो जगद्ब्रह्मणोः सारूप्याभावाज्जगत्कारणं प्रधानादिकमेवेति निश्चयः प्रमेयगतविपरीतभावनेत्यर्थः ॥ स्थितप्रज्ञाऽस्थितप्रज्ञेति प्रज्ञाद्वयम्॥ संप्रज्ञातसमाधिरसम्प्रज्ञातसमाधिश्चेति समाधिद्वयम् ॥ ६ ॥

ब्रह्मजीवशरीराण्यप्यवस्थाकरणे तथा ॥
कर्म चैतानि सर्वाणि त्रिविधानि स्मृतानि वै॥७॥

ब्रह्मादिकर्मान्तानि षट् प्रत्येकं त्रिविधानीत्यर्थः ॥ एकमेवाद्वितीयं ब्रह्म समष्टिस्थूलसूक्ष्मकारणशरीरोपाधितया–विराड् हिरण्यगर्भ ईश्वर इति चोच्यते ॥

एतेषामेव-ब्रह्मत्रयमिति संज्ञा ॥ एक एव प्रत्यगात्मा व्यष्टिस्थूलसूक्ष्मकारणशरीरोपाधिकत्वेन विश्वस्तैजसः प्राज्ञ इति च व्यपदिश्यते ॥ एतेषामेव जीवत्रयमिति संज्ञा ॥ शरीरं त्रिविधं स्थूलसूक्ष्मकारण भेदादित्यर्थः ॥ अवस्था त्रिविधा जाग्रत्स्वप्नसुषुप्ति-भेदादित्यर्थः॥करणं त्रिविधं मनोवाक्कायभेदादित्यर्थः। कर्म त्रिविधं पुण्यपापविमिश्रभेदादित्यर्थः ॥ ७ ॥

पुण्यं पापं विमिश्रं यत्तत्प्रत्येकं त्रिधा मतम् ॥
प्रारब्धं त्रिविधं प्रोक्तं प्रतिबन्धत्रयं तथा ॥ ८॥

पुण्यं कर्म त्रिधा पुण्योत्कर्षपुण्यमध्यमपुणयसामान्यभेदात्। पुण्योत्कर्षरूपकर्मणो हिरण्यगर्भशरीरप्राप्तिःफलम्॥ पुण्यमध्यमरूपकर्मणः इन्द्रादिशरीरप्राप्तिःफलम्।पुण्यसामान्यरूपकर्मणो यक्षरक्षआदि शरीरप्राप्तिः फलम्॥पापं कर्म त्रिधा पापोत्कर्षपापमध्यमपापसामान्यभेदात् ॥ पापोत्कर्षस्य परतापकरगुच्छगुल्मवृश्चिकवनमक्षिकादिशरीरप्राप्तिः फलम् ॥ पापमध्यमस्याम्रपनसनारिकेलमहिष्यश्वगर्दभादि

शरीरप्राप्तिः फलम् ॥ पापसामान्यस्य गोगजाश्वत्थतुलस्यादिशरीरप्राप्तिः फलम्॥ मिश्रंकर्म त्रिधा मिश्रोत्कर्षमिश्रमध्यममिश्रसामान्यभेदात् ॥ मिश्रोत्कर्षस्य निष्कामकर्मानुष्ठानादिनिर्विकल्पकसमाधिपर्यंतयोग्यशरीरप्राप्तिः फलम् ॥ मिश्रमध्यमस्य स्वाश्रमोचितकाम्यकर्मयोग्यशरीरप्राप्तिः फलम् ॥ मिश्रसामान्यस्य चण्डालव्याधादिशरीरप्राप्तिः फलम् ॥ प्रारब्धं त्रिविधं स्वेच्छाकृत परेच्छाकृतानिच्छाकृतभेदात् ॥ तत्र स्वेच्छाकृतं भिक्षाटनादिसमाध्यवस्थायां शिष्यादिभिर्दीयमानमन्नादिकम् परेच्छाकृतम् आकाशफलवदकस्माज्जायमानम्॥ पाषाणपतनादिकमनिच्छाकृतमिति ॥ भूतप्रतिबन्धो वर्त्तमानप्रतिबन्ध आगामिप्रतिबन्धश्चेति ज्ञानप्रतिबन्धत्रयम् ॥ श्रवणादिकाले पूर्वानुभूतस्मरणं भूतप्रतिबन्धः ॥ प्रज्ञामान्द्यादिर्वर्त्तमानप्रतिबन्धः ॥ प्रारब्धशेष आगामिप्रतिबन्धः इति विवेकः ॥ ८ ॥

सम्बन्धस्त्रिविधो ज्ञेयस्त्रिविधस्ताप एव हि ॥
अधिभूतादिकं त्रेधा कारणं त्रिविधं मतम् ॥९॥

संयोगः समवायः आध्यात्मिकतादात्म्यसम्बन्ध इति सम्बन्धस्त्रिविधः॥यद्वा कार्यकारणभावो विषय विषयिभावः आधाराधेयभावश्चेतिसम्बन्धस्त्रिविधः। यद्वा पदयोः समानाधिकरण्यं पदार्थयोर्विशेषणवि-शेष्यभावः प्रत्यगात्मपदार्थयोर्लक्ष्यलक्षणभावश्चेति सम्बन्धस्त्रिविधः ॥ आध्यात्मिकमाधिभौतिकमाधि दैविकं चेति तापस्त्रिविधः ॥ अधिभूतादिकमिति॥ अस्याध्यात्मादिकमित्यर्थः॥ अध्यात्ममधिभूतमधिदै वतमित्यध्यात्मादिकं त्रेधेत्यर्थः॥ आरम्भः परिणामो विवर्त्तश्चेति कारणं त्रिविधम् ॥ ९ ॥

त्रयो गुणास्त्रयः कलास्तिस्र एव हि मूर्त्तयः॥
त्रयो ज्ञात्रादयो लोके प्रपञ्चस्त्रिविधो मतः॥१०॥

सत्त्वरजस्तमांसीति त्रयो गुणाः॥भूतभविष्यद्व-र्त्तमानास्त्रयः कालाः ॥ ब्रह्माविष्णुमहेश्वरास्तिस्रो मूर्तयः ॥ ज्ञाता ज्ञानं ज्ञेयमिति ज्ञात्रादयस्त्रयः ॥

एतदेव त्रिपुटीत्युच्यते ॥ स्थूलप्रपञ्चः सूक्ष्मप्रपञ्चः कारणप्रपञ्चश्चेति प्रपंचस्त्रिविधः ॥ १० ॥

लोकत्रयं तथा ज्ञानप्रतिबन्धत्रयं स्मृतम् ॥
वासनात्रितयं लोके श्रवणादित्रयं मतम् ॥११॥

पातालमर्त्यस्वर्गा इति लोकत्रयम् ॥ एतदेव जगत्त्रयमिति चोच्यते ॥ संशयोसंभावना विपरीतभावनेतिज्ञानप्रतिबन्धत्रयम् ॥ लोकवासना देहवासना शास्त्रवासनेति वासनात्रयम् ॥ श्रवणमनननिदिध्यासनानीति श्रवणादित्रयम्॥सर्वसंशयनिवर्त्तकं श्रवणम् ॥ असंभावनानिवर्त्तकं मननम् ॥ विपरीतभावनानिवर्त्तकं निदिध्यासनमिति विवेकः ॥ ११ ॥

ज्ञानादित्रितयं ज्ञेयं तथा हेत्वादयस्त्रिधा ॥
प्राणायामत्रयं लोके चान्ध्यादित्रयमेव हि ।१२।

ज्ञानं वैराग्यमुपरतिश्चेति ज्ञानादित्रितयम् ॥ तथा ज्ञानस्य हेतुः श्रवणादिः ॥ तत्त्वमिथ्याभेदनिश्चयो ज्ञानस्य स्वरूपम् ॥ अनात्मस्वात्मबुद्ध्यभावो

ज्ञानस्य कार्यम् ॥ वैराग्यस्य हेतुर्विषयेषु दोषदृष्टिः ॥ वान्ताशनवद्धेयता बुद्धिः स्वरूपम् ॥ पुनराशाभावः कार्यम् ॥ उपरतेर्हेतुर्यमनियमादि ॥ चित्तनिरोधः स्वरूपम् ॥ सर्वव्यवहारनाशः कार्यमिति ज्ञानवैराग्योपरतीनां हेतुस्वरूपकार्याणि त्रिधा ज्ञेयानीत्यर्थः॥ प्राणनिग्रहोपाया रेचकपूरककुंभका इति प्राणायामत्रयम् ॥ नेत्रधर्माःआध्यमान्द्यापटुत्वानीत्यान्ध्यादित्रयम् ॥ १२ ॥

तादात्म्यं चैषणा त्रेधा सुषुप्त्याद्रित्रयं भवेत् ॥
वर्त्तमानं स्मृतं ज्ञाने प्रतिबन्धचतुष्टयम्॥ १३ ॥

सहजतादात्म्यं कर्मजतादात्म्यं भ्रान्तिजन्यतादात्म्यमिति तादात्म्यं त्रेधा—क्रमेणाहङ्कारस्य चिच्छायादेहसाक्षिभिस्तादात्म्यमित्यर्थः ॥ पुत्रैषणा वित्तैषणालोकैषणा चेत्येषणा त्रेधा॥सुषुप्तिमूर्च्छासमाधय इति सुषुप्त्यादित्रयम् ॥ विषयाशक्तिः—प्रज्ञामान्द्यं कुतर्को विपर्ययो दुर्ग्रहश्चेति ज्ञानेवर्त्तमानं प्रतिबन्धचतुष्टयम् ॥ १३ ॥

पुरुषार्थश्च शब्दस्य प्रवृत्तौ यन्निमित्तकम् ॥
वर्णास्तथाश्रमास्ते च प्रत्येकंःस्युश्चतुर्विधाः१४।

पुरुषार्थशब्दप्रवृत्तिनिमित्तवर्णाश्रमाश्चत्वारः प्रत्येकं चतुर्विधाः स्युरित्यर्थः ॥ धर्मार्थकाममोक्षा इति पुरुषार्थश्चतुर्विधः ॥ जातिगुणक्रियासम्बन्धा इति शब्दप्रवृत्तिनिमित्तं चतुर्विधम् ॥ ब्रह्मक्षत्रियवैश्य शूद्रा इति वर्णाश्चतुर्विधाः ॥ ब्रह्मचर्याश्रमगृहस्था श्रमवानप्रस्थाश्रमसंन्यासाश्रमा इत्याश्रमाश्चतुर्विधा इति ॥ १४ ॥

साधनानि च चत्वार्यैवानुबन्धचतुष्टयम् ॥
अन्तःकरणं च तद्वत्संकल्पादिचतुष्टयम्॥१५॥

नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः शमादिषट्कसंपत्तिर्मुमुक्षुत्वं चेति चत्वार्येव साधनानीत्यर्थः ॥ विषयप्रयोजनसम्बधाधिकारिण इत्यनुबन्धचतुष्टयम् ॥ जीवब्रह्मैक्यं विषयः॥ स्वरूप प्राप्तिः प्रयोजनम् ॥ बोध्यबोधकभावः सम्बन्धः॥ साधनचतुष्टयसंपन्नोधिकारीति ॥ मनोबुद्ध्यहङ्कार चित्तानीत्यन्तःकरणचतुष्टयम् ॥ संकल्पाध्यवसाया

भिमानानुसन्धानानीति संकल्पादिचतुष्टयम्॥१५॥

वेदाश्चत्वार एवात्र प्रमाणानि तथैव हि ॥
समाधिनाशकं प्रोक्तं विघ्नानां हि चतुष्टयम्१६॥

ऋग्यजुःसामाथर्वण इति वेदाश्चत्वार एव ॥ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि तथैव चत्वार्येव॥ लयविक्षेपकषायरसास्वादा इति समाधिनाशकविघ्न चतुष्टयम् ॥ चित्तवृत्तेर्निद्रा लयः ॥ अन्यावलम्बनं विक्षेपः॥चित्तवृत्तेः स्तब्धीभावः कषायः॥समाध्यारम्भसमये सविकल्पानन्दास्वादनं रसास्वाद इति१६

चतुर्विधं हि मैत्र्यादि भूतग्रामश्चतुर्विधः ॥
चतुष्टयं तथा ब्रह्मविदादीनां प्रकीर्त्तितम्॥१७ ॥

मैत्रीकरुणामुदितोपेक्षा इति मैत्र्यादिचतुष्टयम् ॥ जरायुजाण्डजस्वेदजोद्भिज्जानीति भूतग्रामश्चतुर्विधः ॥ ब्रह्मविद्वरवरीयोवरिष्ठा इति ब्रह्मविदादीनां चतुष्टयं प्रकीर्तितम् ॥ तदर्थश्चाग्रेस्फुटी भविष्यति१७

कोशाः पञ्च समाख्यातास्तथा ज्ञानेंद्रियाणि हि॥
शब्दादयश्च पञ्चैव तथा कर्मेन्द्रियाणि च ॥१८॥

अन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमय इति पञ्चकोशाः ॥ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानीति पञ्च ज्ञानेन्द्रियाणि ॥ शब्दस्पर्शरूपरसगन्धा इति पञ्च शब्दादयः ॥ वाक्पाणिपादपायूपस्था इति पञ्च कर्मेन्द्रियाणि ॥भवन्तीति शेषः सर्वत्र ॥ १८ ॥

वचनादीनि पञ्चैव प्राणाद्या वायवस्तथा ॥
पञ्चोपवायवो देहे कर्म पञ्चविधं स्मृतम् ॥ १९ ॥

वचनादानगमनविसर्गानन्दा इति वचनादीनि पञ्च॥ प्राणापानव्यानोदानसमाना इति प्राणाद्याः पञ्च वायवः॥नागकूर्मकृकरदेवदत्तधनञ्जया इति पञ्चोपवायवः ॥ नित्यनैमित्तिकप्रायश्चित्तकाम्यनिषिद्धानीति कर्म पञ्चविधम्॥नित्यान्यकरणेप्रत्यवायसाधनानि संध्यावन्दनादीनि ॥ नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि॥प्रायश्चित्तानि पापक्षयसाधनानि कृच्छ्रचान्द्रायणादीनि॥काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि। निषिद्धानि नरकाद्यनिष्टसाधनानि ब्रह्महत्यादीनीति विवेकः ॥१९॥

सूक्ष्मभूतानि पञ्चैव तथा स्थूलानि पञ्चधा॥
यमाः पञ्च समाख्याताः पञ्चैव नियमास्तथा २०

शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्राणीति सूक्ष्मभूतानि पञ्च ॥ पञ्चीकृतानि पृथिव्यप्तेजोवाय्वाकाशानीति पञ्चधास्थूल भूतानि॥अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा इति यमाः पञ्च ॥ शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानीति पञ्चैव नियमाः इत्यर्थः ॥ २० ॥

भूमिकाः प्रलयास्तद्वद्भ्रमा वै तन्निवर्त्तकाः ॥
दृष्टान्तास्ते च दृष्टान्ताः प्रत्येकं पञ्चधा मताः २१

भूमिकाप्रलयभ्रमतन्निवर्त्तकदृष्टान्तदृष्टान्तास्ते पञ्च प्रत्येकं पञ्चधेत्यर्थः ॥ क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति भूमिकाः पञ्च ॥ लोकादिवासनासु वर्त्तमानं चित्तं क्षिप्तभूमिका ॥ निद्रातन्द्राग्रस्तं चित्तं मूढभूमिका॥कदाचिद्ध्यानयुक्तं चित्तं क्षिप्ताद्विशिष्टतया विक्षिप्तभूमिका ॥ तत्र क्षिप्तमूढयोः समाधित्वशङ्कैव नास्ति ॥ विक्षिप्ते तु सामाधित्वशङ्का ॥ तदितरद्भूमि

द्वयं समाधिः ॥ एकाग्रे मनसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान्कर्मबन्धनानि श्लथयति निरोधमभिमुखीकरोतीतिसंप्रज्ञाताख्यो योग एकाग्रभूमिका सर्ववृत्तिनिरोधरूपाऽसंप्रज्ञातः समाधिर्निरुद्धभूमिकेति॥नित्यप्रलय अवान्तरप्रलयो दैनन्दिनप्रलयो ब्रह्मप्रलय आत्यन्तिकप्रलयश्चेति प्रलयाः पञ्च॥प्राणिनां सुषुप्तिर्नित्यप्रलयः॥ब्रह्मणः एकस्मिन्नहनि चतुर्दशमनूनां चतुर्दशेन्द्राणां चाधिपत्यमेकस्यापगतेऽन्यस्य प्राप्ते सत्याधिपत्यानुकूलपर्यन्ते तस्मिन्समये चतुर्दशावान्तरप्रलयाः॥ब्रह्मणः सुषुप्तिर्दैनन्दिनप्रलयः॥ ब्रह्मणो नाशावस्था ब्रह्मप्रलयः ॥ मुक्त्यवस्थाऽऽत्यन्तिकः प्रलयः॥(१) जीवात्मापरमेश्वराद्भिन्नः(२) आत्मनि प्रतीयमानं कर्त्तृत्त्वादि वास्तवं (३)--शरीरत्रयावच्छिन्नात्मा सङ्गी ॥३॥ जगत्कारणत्वेन ब्रह्मणो विकारित्वं (४) कारणाद्भिन्नस्य प्रपञ्चस्य सत्यत्वमिति भ्रमाः पञ्च ॥ बिम्बप्रतिबिम्बदृष्टान्तेन प्रथमभ्रमो निवर्त्तनीयः॥ स्फटिकलौहित्यदृष्टान्तेन द्वितीयभ्रमो

निवर्त्तनीयः ॥ घटमठाकाशदृष्टान्तेन तृतीयभ्रमो निवर्त्तनीयः॥रज्जुसर्पदृष्टान्तेन चतुर्थभ्रमो निवर्त्तनीयः ॥ स्वर्णकटकादिदृष्टान्तेन पञ्चमभ्रमो निवर्त्तनीयः इति पञ्चभ्रमनिवर्त्तकाः दृष्टान्ताः पञ्च ॥ ब्रह्मणि जगद्भ्रान्त्या प्रतीयत इत्यत्र शुक्तौ रजतं रज्जौ सर्पः स्थाणौ पुरुषः गगने नीलतादि मरीचिकायां जलमिति दृष्टान्ताः पञ्च ॥ २१ ॥

ख्यातयः पञ्च विज्ञेया निपुणैः षट् समाधयः ॥
अरयः षट् समाख्याता षड्विकाराश्च भावजाः२२

आत्मख्यातिरसत्ख्यातिरन्यथाख्यातिरख्यातिरनिर्वचनीयख्यातिरिति पञ्च ख्यातयः ॥ आत्मख्यातिर्विज्ञानवादिनः ॥ असत्ख्यातिः शून्यवादिनः ॥ अख्यातिः सांख्यप्रभाकरयोः ॥ अन्यथाख्यातिर्भाट्टवैशेषिकयोः॥अनिर्वचनीयख्यातिर्वैदान्तिनः॥ दृश्यानुविद्धशब्दानुविद्धनिर्विकल्पकसमाधय एव बाह्याभ्यन्तरभेदेन षट् समाधयः ॥ दृश्या वृत्तयः। तासां द्रष्टाहमिति दृश्यानुविद्ध आभ्यन्तरः ॥

केवलमसङ्गोहमिति शब्दानुविद्ध आभ्यन्तरः ॥ तयोरस्फुरणं निर्विकल्पक आभ्यन्तरः ॥ सर्पादि द्रष्टाहमिति दृश्यानुविद्धो बाह्यः ॥ केवलमसङ्गोहमिति शब्दानुविद्धो बाह्यः॥ २उभयास्फुरणं निर्विकल्पको बाह्य इति विवेकः ॥ कामक्रोधलोभमोहमदमात्सर्याणीत्यरयः षट् जायन्ते ॥ अस्ति जायते वर्द्धते विपरिणमतेऽपक्षीयते विनश्यतीति षड्भावविकाराः ॥ २२ ॥

षडेव कौशिका देहे जराद्याश्च षडूर्मयः ॥
लिङ्गानि षड्विधान्यत्र षडवस्थाः प्रकीर्तिताः॥२३॥

त्वङ्मांसरुधिरमेदोमज्जास्थीनीति षट् कौशिकाः ॥ जरामरणक्षुत्पिपासाशोकमोहा इति षडूर्मयः ॥ उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ॥ अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णय इति षड्विधलिङ्गानि ॥ प्रकरणेप्रतिपाद्यस्य तदाद्यन्तयोः प्रतिपादनमुपक्रमोपसंहारौ ॥ तन्मध्ये पुनःपुनः प्रतिपादनमभ्यासः ॥ उपनिषदेकगम्यत्वमपूर्वता ॥ आनन्दावाप्तिप्रतिपा-

दनं फलम् ॥ स्तुतिनिन्दापरवाक्यमर्थवादः ॥ वाचारम्भणश्रुतिप्रतिपादिता युक्तिरुपपत्तिरिति विवेकः ॥ शिशुत्वबाल्ययौवनकौमारतारुण्यवार्द्धक यानीति षडवस्थाः ॥ २३ ॥

षट् शास्त्राणि च सूत्राणि षट् षडङ्गानि चैव हि ॥
कर्माणि षट् प्रमाणानि षट् शमादि च षड्विधम्२४॥

पूर्वमीमांसोत्तरमीमांसान्यायकाणादसांख्ययोगा इति षट् शास्त्राणि॥ आश्वलायनापस्तम्बबोधायनकात्यायनसत्याषाढवैखानसा इति षट् सूत्राणि॥शिक्षाकल्पव्याकरणनिरुक्तज्योतिश्छन्दांसीति षडङ्गानि। स्नानसन्ध्याजपहोमदेवतार्चनातिथ्यवैश्वदेवा इति षट् कर्माणि॥प्रत्यक्षानुमानोपमानशब्दानुपलब्ध्यर्थापत्तय इति षट् प्रमाणानि ॥ शमो दमः उपरतिस्तितिक्षा समाधानं श्रद्धेति शमादि षड्विधम् ॥२४॥

सप्तावस्थास्तथा ज्ञेयाश्चैतन्यानां च सप्तकम्॥
भूरादिसप्तकं तद्वत्सर्वपापविनाशकम् ॥ २५ ॥

अज्ञानमावरणं विक्षेपः परोक्षमपरोक्षमनर्थनिवृत्ति रानन्दावाप्तिश्चेति सप्तावस्थाः॥ आवरणं द्विविधम्- असदावरणमभानावरणं चेति । नास्ति कूटस्थ इत्यसदावरणं न भाति कूटस्थ इत्यभानावरणम्॥ प-रोक्षज्ञानादसदावरणनिवृत्तिः॥अपरोक्षज्ञानादभाना वरणानिवृत्तिः।ततोविक्षेपनिवृत्तिः॥ अतोनर्थनिवृत्ति रानन्दावाप्तिश्च भवतीति विवेकः॥"शुद्धमीश्वरचैत न्यं जीवचैतन्यमेव च॥ प्रमाता च प्रमाणं च प्रमेयं च फलं तथा॥ इति सप्तविधं प्रोक्तं भिद्यते व्यवहा रतः" इति चैतन्यसप्तकम्॥ "मायोपाधिविनि र्मुक्तं शुद्धमित्यभिधीयते॥ मायासम्बन्धतश्चेशो जीवोऽविद्यावशस्तथा॥ अन्तः करणसंबन्धात्प्रमाते त्यभिधीयते॥ तथा तद्वृत्तिसम्बन्धात्प्रमाणमिति कथ्यते॥ अज्ञातमपि चैतन्यं प्रमेयमिति कथ्यते॥ तथा ज्ञातं हि चैतन्यं फलमित्यभिधीयते"इति विवे कः॥ भूर्भुवःस्वर्महर्जनस्तपःसत्यमिति भूरादि सप्तकम्॥ व्याहृतित्वाद्भूरादीनां पापविनाशकत्व मित्यर्थः॥ २८॥

सप्तकं चातलादीनां सप्तैव ज्ञानभूमिकाः ॥
पुर्य्यष्टकं समाख्यातमष्टौ प्रकृतयस्तथा ॥ २६ ॥

अतलवितलसुतलतलातलमहातलरसातलपातालानीत्यतलादिसप्तकम् ॥ "ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ॥ विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥१॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंशक्तिनामिका ॥ पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता" इति ज्ञानभूमिकाः सप्त ॥ भूमिका नाम चित्तस्यावस्थाविशेषः ॥ तत्र भूमित्रयं ब्रह्मविद्यासाधनमेव न तु ब्रह्मविद्याकोटावन्तर्भूतम् ॥ यश्चतुर्थभूमिकां प्राप्तः स ब्रह्मविदित्युच्यते ॥ पञ्चमभूमौ निर्विकल्पात्तदा स्वयमेव व्युत्तिष्ठति ॥ सोयं योगी ब्रह्मविद्वरः ॥ षष्ठभूमौ पार्श्वस्थबोधितो व्युत्तिष्ठति । सोयं ब्रह्मविद्वरीयान् ॥ सप्तमभूमिकां प्राप्तो ब्रह्मविद्वरिष्ठः इत्युच्यत इति विवेकः ॥ "१ ज्ञानेन्द्रियाणि खलु पञ्च तथा २ पराणि कर्मेन्द्रियाणि ३ मनआदिचतुष्टयं च ४ ॥ प्राणादिपञ्चकम् ५ अथो

विदायदिकं च६कामश्च७कर्म च८तमः पुनरष्टधा पूः" इति पुर्यष्टकम् ॥ "भूमिरापोनलो वायुः खं मनो बुद्धिरेव च ॥ अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा" इत्यष्टौ प्रकृतयः ॥ २६ ॥

अङ्गान्यष्टौ समाधेश्च तथाष्टौ मैथुनस्य च ॥
संसारो नवधा ख्यातो देवता दश पञ्च च ॥२७॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टावङ्गानि निर्विकल्पकसमाधेरिति केचित् ॥ अस्मिन्पक्षेऽङ्गषटकसमाधिशब्देन सविकल्पाख्याङ्गं संप्रज्ञातसमाधिरुच्यते ॥ संप्रज्ञातसमाधेरेतान्यष्टाङ्गानीति केचित् ॥ अस्मिन्पक्षेऽङ्गषटकसमाधिः संप्रज्ञाताद्भिन्न इत्यङ्गीकरणीयम्॥अङ्गाङ्गिनोर्भेदावश्यकत्वात् ॥ तथा विच्छिद्यविच्छिद्य प्रत्ययावृत्तिर्ध्यानम् ॥ सावधानेनाविच्छिद्याविच्छिद्य प्रत्ययावृतिरङ्गषटकः संप्रज्ञाताख्यसाधनसमाधिः ॥ निरवधितयाऽविच्छिद्य प्रत्ययावृत्तिरङ्गिस्वरूपसंप्रज्ञाताख्यसाध्यसमाधिरिति भेदः॥त्रयाणां

विषयैक्येपि चित्तपरिपाकतारतम्यमङ्गी करणीयम्॥ करचरणादिसंस्थाविशेषलक्षणानि पद्मकस्वस्तिकादीन्यासनानि॥इन्द्रियाणां स्वस्वाविषयेभ्यः प्रत्याहरणं प्रत्याहारः॥अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारणा॥ "दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम्॥संकल्पो ध्यवसायश्च क्रियानिर्वृत्तिरेव च॥एतन्मैथनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः"इत्यष्टावङ्गानि मैथुनस्य॥रागपूर्वकं स्त्र्यादिविषयकं ज्ञानं दर्शनम् ॥ तत्पूर्वकं क्रियादिविशेषजन्यं ज्ञानं स्पर्शनम्॥रागपूर्वकं परिहासादिव्यवहारः केलिः॥स्त्र्यादेरनुरागपूर्वकं सौन्दर्य्यादिवर्णनं कीर्तनम्॥रागपूर्वकं रहसि संभाषणं गुह्यभाषणम्॥स्त्र्यादिविषयको दृढेच्छाविशेषः इदमस्त्वित्येवंरूपः संकल्पः॥अनया रमे इति निश्चयोऽध्यवसायः॥रागपूर्वकं स्त्र्यादिविषयकानुभवविशेषः क्रियानिर्वृत्तिरिति विवेकः ॥ ज्ञाता ज्ञानं ज्ञेयं, भोक्ता भोग्यं भोगः, कर्त्ता करणं क्रियेति नवधा संसारः इत्येकः पक्षः ॥ महाभू

तानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि प्राणादिपञ्चकं मनआदिचतुष्टयं स्थूलशरीरमेकं त्रिविधकर्माण्यवस्थात्रयमेतेषां कारणीभूतमज्ञानं चेति नवधा संसारः इत्यपरः पक्षः ॥ "दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ॥ तथा चन्द्रश्चतुर्वक्त्रो रुद्रः क्षेत्रज्ञ ईश्वरः" इत्यधिष्ठातृदेवताः पञ्चदश ॥ २७ ॥

अस्थ्याद्या दश पञ्चैव रागाद्याः षोडशैव हि ।
लिङ्गषोडशकं केचित्तथा सप्तदशात्मकम् ॥ २८ ॥

अस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रकफवातपित्तानीत्यस्थ्याद्याः पञ्चदश ॥ एतत्पञ्चदशसमुदायात्मकं स्थूलशरीरमिति ज्ञातव्यम् ॥ रागद्वेषकामक्रोधलोभमोहमदमात्सर्येर्ष्यासूयादम्भदर्पाहङ्कारेच्छाभक्तिश्रद्धा इति रागाद्याः षोडश ॥ एतेषां मध्ये भक्तिश्रद्धे मुक्तिहेतू ॥ इच्छा तु मुक्तिहेतुर्बन्धहेतुश्च ॥ अन्ये बन्धहेतव इति विवेकः कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं प्राणादिपञ्चकमन्तःकरणं चेतिषोडशकं लिङ्गमिति केचिद्वदन्तीत्यन्वयः

इदमेव सूक्ष्मशरीरमिति वेदितव्यम्॥ "पञ्चप्राणमनो बुद्धिदशेन्द्रियसमन्वितम् ॥ अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" इति सप्तदशात्मकं लिङ्गमित्यपि केचित् ॥ २८ ॥

केचिद्वदन्तित्त लिङ्गं नवाधिकदशात्मकम् ॥
चतुर्विंशतितात्वानि षट्त्रिंशत्सख्यकान्यपि २९

चित्ताहङ्काराभ्यां सहितं पूर्वोक्तं नवदशकं लिङ्गमित्यपि केचित् ॥ ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणादिपञ्चकं शब्दादिपञ्चकं मनआदिचतुष्टयमित्येवं चतुर्विंशतितत्त्वानीति केचित् ॥ पञ्चीकृतभूतानि पञ्च शरीरत्रयमवस्थात्रयमज्ञानं च पूर्वोक्तैस्तत्त्वैः सह षट्त्रिंशत्तत्त्वानीति केचित् ॥ २९ ॥

आ षण्णवतितत्त्वानि प्रवदन्ति मनिषिणः ॥
अथो परमहंसानां संन्यासो द्विविधो मतः ।३०।

षड्भावविकाराः षडूर्मयः षट्कौशिकाः अरयः षट् जगत्त्रयं गुणत्रयं कर्मत्रयं वचनादिपञ्चकं संकल्पादि चतुष्टयं मैत्र्यादिचतुष्टयमज्ञानाधिष्ठातृदेवतारहिता

दिगाद्यधिष्ठातृदेवताश्चतुर्दश पूर्वोक्तैस्तत्त्वैः सह षण्णवतितत्त्वानि प्राहुरित्यर्थः ॥ विविदिषासंन्यासो विद्वत्संन्यासश्चेति परमहंससंन्यासो द्विविधः॥३०॥

तत्रापि द्विविधो विद्वत्संन्यासः परिकीर्तितः॥
निग्रहो द्विधो ज्ञेयोहङ्कारोपि द्विधा मतः ॥३१॥

विद्वत्सन्यासोपि जातरूपधरः कमण्डलुधारीति द्विविधः ॥ क्रमनिग्रहो हठनिग्रहश्चेति द्विविधो निग्रहः ॥ सामान्याहङ्कारो विशेषाहङ्कारश्चेत्यहङ्कारोपि द्विधा ॥ ३१ ॥

आनन्दास्त्रय एवात्र त्रिविधं कर्म चोच्यते ॥
जाग्रत्स्वप्नसुषुप्तानि प्रत्येकं त्रिविधानि वै ॥३२॥



ब्रह्मानन्दो विषयानन्दो वासनानन्दश्चेत्यानन्दास्त्रयः निजानन्दमुख्यानन्दात्मानन्दयोगानन्दाद्वैतानन्दानां ब्रह्मानन्देन्तर्भावः ॥ विद्यानन्दस्य विषयानन्देन्तर्भावः॥आगामि सञ्चितं प्रारब्धमिति त्रिविधं कर्म ॥ जन्मारभ्य मरणपर्यन्तकृतं पुण्यपापरूपं कर्मागामी

त्युच्यते॥ जन्महेतुभूतत्वेन स्थितं पूर्वकृतं कर्म संचित मित्युच्यते॥शरीरारम्भकं कर्म प्रारब्धमिति भेदः॥ जाग्रज्जाग्रज्जाग्रत्स्वप्नोजाग्रत्सुषुप्तिरिति जाग्रत्त्रिविधः॥ प्रमाज्ञानं जाग्रज्जाग्रत्॥शुक्तिरजतादिभ्रमो जाग्रत्स्वप्नः॥ श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिरित्यर्थः॥ स्वप्नजाग्रत्स्वप्नस्वप्नः स्वप्नसुषुप्तिरिति स्वप्नस्त्रिविधः॥ स्वप्नेमन्त्रादिप्राप्तिः स्वप्नजाग्रत्॥ स्वप्नेपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः॥ जाग्रद्दशायां कथयितुं शक्यते स्वप्नावस्थायां च यत्किञ्चिदनुभूयते तत्स्वप्नसुषुप्तिरित्यर्थः॥ सुषुप्तिजाग्रत्सुषुप्तिस्वप्नः सुषुप्तिसुषुप्तिरिति सुषुप्तं त्रिविधम्॥ सुषुप्त्यवस्थायामपि सात्त्विकी या सुखाकारा वृत्तिः सा सुषुप्तिजाग्रत्॥ तदनन्तरं सुखमहमस्वाप्समिति परामर्शात्तत्रैव या राजसी वृत्तिः सा सुषुप्तिस्वप्नः॥ तदनन्तरं दुःखमहमस्वाप्समिति परामर्शात्तत्रैव या तामसी वृत्तिः सा सुषुप्तिसुषुप्तिः॥ तदनन्तरं गाढं मूढोहमासमिति परामर्शादित्यर्थः॥ ३२॥

आत्मत्रयं च विज्ञेयं सन्यासस्तु चतुर्विधः ॥
चतस्रो भूमिका ज्ञेयाश्चतस्रो युक्तयस्तथा॥३३॥

ज्ञानात्मा महानात्मा शान्तात्मा चेत्यात्मत्रयम् ॥ कुटीचको बहूदको हंसः परमहंसश्चेति संन्यासश्चतुर्विधः ॥ तत्त्वविदोपि क्लेशक्षयायास्त्येवासंप्रज्ञातसमाध्यपेक्षा॥ तस्य चासंप्रज्ञातसमाधेर्गवाश्वादिष्विव वाङ्निरोधः प्रथमा भूमिः॥बालमूकादिष्विव निर्ममत्वं द्वितीया।तन्द्रायामिवाहङ्काररहित्यं तृतीया।सुषुप्ताविव महत्तत्त्वराहित्यंचतुर्थभूमिकेति भूमिकाश्चतस्रः एतदभिप्रेत्य शनैरुपरमेदित्युक्तं भगवता ॥"आध्यात्मविद्याधिगमः साधुसङ्गम एव च ॥ वासनासंपरित्यागः प्राणस्पन्दनिरोधनम्" इति युक्तयश्चतस्रः ॥ चित्तक्षये युक्तिरेकैव साधनमिति ॥ अतः पूर्वस्मादार्ढ्याभावे उत्तरसाधनेऽप्रवृत्तिरिति विज्ञेयम् ॥३३॥

भिक्षवः षडजिह्वाद्या मौनाद्याः सप्तधा मताः ॥
नाडिकादशकं नाडीदेवता दश कीर्तिताः ३४॥

"अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च॥मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः" इति भिक्षवः षट्॥

"इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जते ॥ हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते" ॥ १ ॥ "अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ॥ शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः"॥ २ ॥ "भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च॥योजनान्नपरं याति सर्वथा पङ्गुरेव सः"॥३॥ "तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् ॥ चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्ध उच्यते"॥ ४ ॥ "हिताहितं मनोरामं वचः शोकावहं च यत् ॥ श्रुत्वापि यो नो शृणोति बधिरः स प्रकीर्तितः"॥५॥ "सान्निध्ये विषयाणां च समर्थोऽविकलेन्द्रियः ॥सुप्तवद्वर्त्तते नित्यं स भिक्षुर्मुग्ध उच्यते"॥६॥ इत्यर्थः॥ "मौनं योगासनं योगस्तितिक्षैकान्तशीलता॥ निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः" इति मौनाद्याः सप्तधा मताः॥संमता इत्यर्थः॥ "इडा च पिङ्गला चैव सुषुम्णा च ततः परम् ॥ गान्धारी हस्तिजिह्वा च पूषा चैव पयस्विनी॥१॥लकुहाऽलम्बुसा चैव शङ्खिनी दश नाडिकाः" इति नाडीदशकम्॥इडा चन्द्रनाडी२ पिङ्गला सूर्यनाडी ॥सुषुम्णा मध्यनाडी ॥ गान्धारी

दक्षिणनेत्रिका ॥ हस्तिजिह्वा वामनेत्रिका॥ पूषा दक्षिणकर्णिका ॥ पयस्विनी वामकर्णिका ॥ लकुहा गुह्यनाडी॥ अलम्बुसा मेढ्रनाडी॥ शङ्खिनी नाभिनाडीति विवेकः ॥ हरिब्रह्मरुद्रेन्द्रवरुणेशपद्मोद्भवपृथिवीसूर्यचन्द्रा इति क्रमान्नाडीनां दश देवताः ॥ ३४ ॥

अन्तरङ्गमदाश्चाष्टौ षट् संख्याका बहिर्मदाः ॥
अष्टमूर्तिमदाः ख्याताः पाशाश्चाष्टौ प्रकीर्तिताः ॥ ३५ ॥

धनिनी स्थितिनी कृतिनी वर्त्तिनी क्रोधिनी मोहिन्यतिचारिणी वाहिनीत्यष्टान्तरङ्गमदाः॥ कुलंशीलं धनं चैव रूपं यौवनमेव च॥ विद्या राज्यं तपश्चैवमित्येते षड् बहिर्मदाः" इति षड् बहिर्मदाः॥ पृथिवी सलिलं पावकः शशी पवनोम्बरं रविरात्मेत्यष्टमूर्त्तिमदाः॥ पृथिवीमदाविर्भावे जीवस्तमोगुणभरितो वस्त्रादीच्छावान्भवति ॥ सलिलमदाविर्भावे संसारभरितो ममेदमावश्यकमिति चिन्तायुक्तो भवति ॥ पावकमदाविर्भावे कामभरितो वनितासंभोगे-

च्छया तदनुकूलव्यापारवान्भवति ॥ शशिमदाविर्भावे चिन्ताभरितः करिष्यमाणकार्यं भविष्यति वा कृतं चेदन्यथा भविष्यति वेति संशयात्तूष्णीं स्थितो भवति क्षणमात्रम् ॥ पवनमदाविर्भावे प्रयाणभरितः परदेशगमनेच्छावान्भवति ॥ आकाशदाविर्भावे वाहनभरितो गजाश्वादीच्छावान्भवति ॥ सूर्यमदाविर्भावे क्रोधाग्निभरित इदं संहर्त्तव्यमितीच्छावान्भवति॥ आत्ममदाविर्भावेहङ्कारभरितो विद्यादिभिर्ममसमः को वेति प्रज्ञावान्भवतीति विवेकः ॥ "घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चकम् ॥ कुलं शीलं च वित्तं चेत्यष्टौ पाशाः प्रकीर्तिताः" इत्यष्टौ पाशाः ॥ ३५ ॥

धातवः सप्त विज्ञेयाः सप्तैव व्यसनानि वै ॥
षड् भ्रमाः पञ्च वै क्लेशास्तापोप्याध्यात्मि
को द्विधा ॥ ३६ ॥

"रसो रुधिरमांसे च मेदो मज्जास्थिरेतसी ॥ धातवः सप्त विज्ञेयाः सर्वदेहसमाश्रयाः" इति सप्त धातवः ॥ भुक्तमन्नं रसात्मतया परिणतं सद्रस इत्यु-

च्यते ॥ एवं सर्वत्र रुधिरादिषु रुधिरात्मकतयेत्यादि विज्ञेयम् ॥ तनुव्यसनमनोव्यसनधनव्यसनराज्यव्यसनविश्वव्यसनोत्साहव्यसनसेवकव्यसनानीति सप्त व्यसनानि ॥ तनुव्यसनोद्गमे शरीरं कृशं जातमिति जीवः खिन्नो भवति ॥ मनोव्यसनोद्गमे चौर्यपरीक्षादिमान्भवति ॥ विश्वव्यसनोद्गमे गृहक्षेत्रादिसंपादनेच्छावान्भवति ॥ उत्साहव्यसनोद्गमे पुत्रकलत्रादीच्छावान्भवति ॥ सेवकव्यसनोद्गमे परराष्ट्रगमनादिसकलधर्मपोषणरतो भवति ॥ शेषं स्पष्टार्थम् ॥ कुलगोत्रजातिवर्णाश्रमनामभेदेन षड् भ्रमाः ॥ मालवकर्णाटकद्राविडभेदाभिमानव्यवहारः कुलभ्रमः ॥ विश्वामित्रादिव्यवहारो गोत्रभ्रमः ॥ ब्रह्मक्षत्रवैश्यशूद्राभिमानव्यवहारो जातिभ्रमः ॥ अष्टादशवर्णेष्वहं श्रेष्ठ इत्यभिमानव्यवहारो वर्णभ्रमः ॥ शेषं स्फुटम् ॥ अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ अथवाऽविद्यास्मितासूयास्पर्द्धाभिनिवेशाः पञ्च क्लेशाः ॥ मलादि-

वेष्टितस्थूलशरीरमेवाहमित्यभिमानोऽविद्या ॥ तापत्रयानुभवएवाऽस्मिता ॥ रागादिभिः परिभवानुभव एवाऽसूया ॥ सज्जनदर्शने द्वेषबुद्ध्या निषेधएव स्पर्द्धा ॥ लोकरञ्जनाय तदुचितकर्मोद्योगवेषादिधारणाऽभिनिवेश इति विवेकः ॥ मानसतापः शारीरताप इत्याध्यात्मिकतापो द्विधा ॥ ज्वरगुल्मशूलादिदोषसंपादिततापः शारीर तापः॥असूयादिसंपादितचित्तव्याकुलतैव मानसताप इत्यर्थः॥३६॥

क्षयादयस्त्रयस्तापाः गुणा वै पञ्चसप्ततिः ॥
रूपषट्कं च विज्ञेयं स्पर्शः प्रोक्तश्चतुर्विधः ॥ ३७ ॥

स्वर्गलोके क्षयादितापास्त्रयः ॥ क्षयतापः अतिशयतापः साहसपतनताप इति तापाःस्वर्गे त्रयःइत्यर्थः यथा स्वार्जितधनक्षयेण मनोविचारात्मकतापः तथा पुण्यकर्मक्षये पुनः पतनभीतिजन्यताप एव क्षयतापः॥ स्वर्गलोकगमनसमये स्वाधिकतरं देवतास्थापितलोकदर्शनमेवातिशयतापः ॥ पुण्यकर्मक्षयानन्तरं तत्रत्यसुरकोटिभिर्मुद्गरमुशलप्रहरणेन कम्पितसर्वाङ्गप-

तनं स्वर्गलोके साहसपतनताप इति बोध्यम् ॥ "अ-
स्थिमांसत्वचा नाडी रोम चैवतु पञ्चकम् ॥ पञ्च
क्षितिगुणाः प्रोक्तास्तथैवांशाः प्रकीर्त्तिताः ॥ १ ॥
श्लेष्मा मूत्रं तथा स्वेद शुक्रं शोणितमेव च ॥ अपां
पञ्च गुणाः प्रोक्तास्तथैवांशाः प्रकीर्त्तिताः ॥ २ ॥
क्षुधा तृषा तथा निद्रा ह्यालस्यं सङ्ग एव च ॥ अग्नेः
पञ्च गुणाः प्रोक्तास्तथैवांशाः प्रकीर्त्तिताः ॥ ३ ॥
धावनं चलनं चैवाकुञ्चनं च प्रसारणम् ॥ वियो-
गश्चेति विज्ञेयं वायोः पञ्च गुणा इति ॥ ४ ॥
रागद्वेषौ भयं लज्जा मोहश्च नभसस्तथा ॥ इति पञ्च-
गुणाः प्रोक्तास्तथैवांशाःप्रकीर्त्तित्ताः॥ ५ ॥ इति ॥
तथा च पृथिव्याः शब्दस्पर्शरूपरसगन्धात्मकपञ्चगुण
कत्वेनशब्दादिपञ्चगुणसम्बन्धवत्यां पृथिव्यां पञ्चविंश
तिर्गुणाः प्राप्ताः ॥ एकैकस्य शब्दगुणादेः श्लोकोक्तपञ्च-
विशेषगुणकत्वकथनात् ॥ तथा चापां विंशतिर्गुणाः
अग्नेः पञ्चदश गुणाः, वायोर्दश गुणाः, आकाशस्य
पञ्च गुणा इति पञ्चसप्ततिर्गुणाः सुधीभिर्विभावनी-

याः॥श्वेतपीतहरितरक्तकृष्णमाञ्जिष्ठभेदेन रूपषट्कम्॥ शीतोष्णमृदुकाठिन्यभेदेन स्पर्शश्चतुर्विधः ॥ ३७॥

शब्दो द्विधा रसाः षड्वै गन्धोत्र द्विविधो मतः ॥
वर्णा नवैव विख्याता ऐश्वर्य्याद्याः षडेव हि३८

अक्षरानक्षरभेदेन शब्दो द्विधा ॥ मधुराम्लतिक्त कटुकषायलवणभेदेन रसाः षट् ॥ सुगन्धदुर्गन्ध भेदेन गन्धो द्विविधः ॥ प्राण इन्द्रनीलवर्णः, अपानो हरितवर्णः, व्यानः कपिलवर्णः, उदानस्त डिद्वर्णः, समानो नीलवर्णः, नागः पीतवर्णः, कूर्मः श्वेतवर्णः, कृकलः अञ्जनवर्णः, देवदत्तः स्फटिकवर्णः ॥ धनञ्जय इन्द्रनीलवर्ण इत्याहत्य नव वर्णाः॥"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः॥ज्ञानवैराग्ययोश्चैव षण्णांभग इतीङ्गना" इत्यैश्वर्य्याद्याः षट् ॥ ३८ ॥

षडुत्पत्त्यादयो ज्ञेया नादाद्यास्त्रय एव हि ॥
वेदान्तस्य पदार्थानामेवं संज्ञाः प्रकीर्त्तिताः ३९

इति श्रीवेदसंज्ञाख्यः प्रबन्धोयं मया कृतः॥
अनेन प्रीयतां श्रीमद्दक्षिणामूर्तिरीश्वरः॥४०॥

इति श्रीमन्मिश्रकृष्णदत्तसमाधीतविद्यादि-
त्यपुरीविरचितं श्लोकबद्धं संज्ञाप्रकर-
णं समाप्तम्॥ शिवं भूयात्॥

"उत्पत्तिं निधनं चैव भूतानामागतिं गतिम्॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इत्युत्पत्त्यादयः षट्॥ नादबिन्दुकला इति नादाद्यास्त्रयः॥ संवृते गलविवरे यत्कण्ठे निनादकरणं स नादः॥ अनुस्वारो बिन्दुः नादैकदेशः कलेत्यर्थः॥ एवमुक्तेन प्रकारेण वेदान्तस्योपनिषदः पदार्थानामध्यारोपमाश्रित्य संज्ञाः प्रतिपादिता इत्यर्थः॥ ३९॥ ४०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरचर-
णपुरीशिष्यादित्यपुरीविरचिता श्लोक
बद्धवेदान्तसंज्ञाव्याख्या प्रदीपिका
समाप्तिमगमत्॥ शिवं भूयात्॥

ॐ

